# ॥ श्रीबटुकभैरवब्रह्मकवचम् ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीउमामहेश्वराभ्यां नमः ॥

॥ श्रीगुरवे नमः ॥

॥ श्रीभैरवाय नमः ॥

श्रीदेव्युवाच ।
भगवन्सर्ववेत्ता त्वं देवानां प्रीतिदायकम् ।
भैरवं कवचं ब्रूहि यदि चास्ति कृपा मयि ॥ १॥

प्राणत्यागं करिष्यामि यदि नो कथयिष्यसि ।
सत्यं सत्यं पुनः सत्यं सत्यमेव न संशयः ॥ २॥

इत्थं देव्या वचः श्रुत्वा प्रहस्यातिशयं प्रभुः ।
उवाच वचनं तत्र देवदेवो महेश्वरः ॥ ३॥

ईश्वर उवाच ।
बाटुकं कवचं दिव्यं शृणु मत्प्राणवल्लभे ।
चण्डिकातन्त्रसर्वस्वं बटुकस्य विशेषतः ॥ ४॥

तत्र मन्त्राद्यक्षरं तु वासुदेवस्वरूपकम् ।
शङ्खवर्णद्वयो ब्रह्मा बटुकश्चन्द्रशेखरः ॥ ५॥

आपदुद्धारणो देवो भैरवः परिकीर्तितः ।
प्रवक्ष्यामि समासेन चतुर्वर्गप्रसिद्धये ॥ ६॥

प्रणवः कामदं विद्या लज्जाबीजं च सिद्धिदम् ।
बटुकायेति विज्ञेयं महापातकनाशनम् ॥ ७॥

आपदुद्धारणायेति त्वापदुद्धारणं नृणाम् ।
कुरुद्वयं महेशानि मोहने परिकीर्तितम् ॥ ८॥

बटुकाय महेशानि स्तम्भने परिकीर्तितम् ।
लज्जाबीजं तथा विद्यान्मुक्तिदं परिकीर्तितम् ॥ ९॥

द्वाविंशत्यक्षरो मन्त्रः क्रमेण जगदीश्वरि ।

॥ ॐ ह्रीं बटुकाय आपदुद्धारणाय कुरु कुरु बटुकाय ह्रीम् ॥

इसका जप कवच से पहले और बाद में ११ या २१ बार करें ॥

ॐ अस्य श्रीबटुकभैरवब्रह्मकवचस्य भैरव ऋषिः ।
अनुष्टुप् छन्दः । श्रीबटुकभैरवो देवता ।
मम श्रीबटुकभैरवप्रसादसिद्ध्यर्थे जपे विनियोगः ॥

अथ पाठः ।
ॐ पातु नित्यं शिरसि पातु ह्रीं कण्ठदेशके ॥ १०॥

बटुकाय पातु नाभौ चापदुद्धारणाय च ॥

कुरुद्वयं लिङ्गमूले त्वाधारे वटुकाय च ॥ ११॥

सर्वदा पातु ह्रीं बीजं बाह्वोर्युगलमेव च ॥

षडङ्गसहितो देवो नित्यं रक्षतु भैरवः ॥ १२॥

ॐ ह्रीं बटुकाय सततं सर्वाङ्गं मम सर्वदा ॥

ॐ ह्रीं पादौ महाकालः पातु वीरासनो हृदि ॥ १३॥

ॐ ह्रीं कालः शिरः पातु कण्ठदेशे तु भैरवः ।
गणराट् पातु जिह्वायामष्टाभिः शक्तिभिः सह ॥ १४॥

ॐ ह्रीं दण्डपाणिर्गुह्यमूले भैरवीसहितस्तथा ।
ॐ ह्रीं विश्वनाथः सदा पातु सर्वाङ्गं मम सर्वदः ॥ १५॥

ॐ ह्रीं अन्नपूर्णा सदा पातु चांसौ रक्षतु चण्डिका ।
आसिताङ्गः शिरः पातु ललाटं रुरुभैरवः ॥ १६॥

ॐ ह्रीं चण्डभैरवः पातु वक्त्रं कण्ठं श्रीक्रोधभैरवः ।
उन्मत्तभैरवः पातु हृदयं मम सर्वदा ॥ १७॥

ॐ ह्रीं नाभिदेशे कपाली च लिङ्गे भीषणभैरवः ।
संहारभैरवः पातु मूलाधारं च सर्वदा ॥ १८॥

ॐ ह्रीं बाहुयुग्मं सदा पातु भैरवो मम केवलम् ।
हंसबीजं पातु हृदि सोऽहं रक्षतु पादयोः ॥ १९॥

ॐ ह्रीं प्राणापानौ समानं च उदानं व्यानमेव च ।

रक्षतु द्वारमूले च दशदिक्षु समन्ततः ॥ २०॥

ॐ ह्रीं प्रणवं पातु सर्वाङ्गं लज्जाबीजं महाभये ।
इति श्रीब्रह्मकवचं भैरवस्य प्रकीर्तितम् ॥ २१॥

चतुर्वर्गप्रदं नित्यं स्वयं देवप्रकाशितम् । (चतुर्वर्गफलप्रदं)
यः पठेच्छृणुयान्नित्यं धारयेत्कवचोत्तमम् ॥ २२॥

सदानन्दमयो भूत्वा लभते परमं पदम् ।
यः इदं कवचं देवि चिन्तयेन्मन्मुखोदितम् ॥ २३॥

कोटिजन्मार्जितं पापं तस्य नश्यति तत्क्षणात् ।
जलमध्येऽग्निमध्ये वा दुर्ग्रहे शत्रुसङ्कटे ॥ २४॥

कवचस्मरणाद्देवि सर्वत्र विजयी भवेत् ।
भक्तियुक्तेन मनसा कवचं पूजयेद्यदि ॥ २५॥

कामतुल्यस्तु नारीणां रिपूणां च यमोपमः ।
तस्य पादाम्बुजद्वन्द्वं राज्ञां मुकुटभूषणम् ॥ २६॥

तस्य भूतिं विलोक्यैव कुबेरोऽपि तिरस्कृतः ।
यस्य विज्ञानमात्रेण मन्त्रसिद्धिर्न संशयः ॥ २७॥

इदं कवचमज्ञात्वा यो जपेद्बटुकं नरः ।
न चाप्नोति फलं तस्य परं नरकमाप्नुयात् ॥ २८॥

मन्वन्तरत्रयं स्थित्वा तिर्यग्योनिषु जायते ।
इह लोके महारोगी दारिद्र्येणातिपीडितः ॥ २९॥

शत्रूणां वशगो भूत्वा करपात्री भवेज्जडः ।
देयं पुत्राय शिष्याय शान्ताय प्रियवादिने ॥ ३०॥

कार्पण्यरहितायालं बटुकभक्तिरताय च ।
योऽपरागे प्रदाता वै तस्य स्यादतिसत्वरम् ॥ ३१॥

आयुर्विद्या यशो धर्मं बलं चैव न संशयः ।
इति ते कथितं देवि गोपनीयं स्वयोनिवत् ॥ ३२॥

॥ इति श्रीरुद्रयामलोक्तं श्रीबटुकभैरवब्रह्मकवचं सम्पूर्णम् ॥

